अथ वरुणाधिकरणम् ।

## ताडितोऽधि वरुणः सम्बन्धात् ।४।३।३।

" स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम् " (कौषी० १।३।) इति श्रूयते । तत्र संशयः। किं वरुणादीनां पाठमनुसृत्य वायोः परं निवेश आहोस्विद्विद्युत ऊर्ध्वमेवेति संशये पाठस्यावैयर्थ्याय कुत्रापि निवेशस्त्वावश्यकस्तत्र विद्युतः ऊर्ध्वं निवेशाऽसम्भवात् । कुतः ? ' तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयति ' इति तडित्पुरुषस्यैव ब्रह्मप्रापकत्वश्रवणात् । तत्रावकाशाभावेन वायोरूर्ध्वं वरुणादीनां निवेश इति प्राप्तेऽभिधीयते—तडितोऽधिवरुण इति । तडित ऊर्ध्वमेव वरुणो निवेशनीयः। कुतः? सम्बन्धात् । तडितो मेघस्थत्वादुभयोः सम्बन्धस्तस्मात् । पाठावैयर्थ्याय क्वचिदपि निवेशनीयेऽबलीयांसमर्थक्रममनुसृत्य विद्युतोऽधि वरुणो निवेशनीयः। तत ऊर्ध्वमिन्द्रादीनामन्यत्रश्रुतानां निवेशः। 'आगन्तूनामन्ते निवेश' इति न्यायमनुसृत्येति । ततश्चायं क्रमः सम्पन्नः नाडीरश्मिप्रवेशानन्तरमर्चिषमर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षादुत्तरायणमासांस्तेभ्यः संवत्सरं संवत्सराद्वायुं वायोरादित्यमादित्याच्चन्द्रमसं चन्द्रमसो वैद्युतं वैद्युताद्वारुणं वारुणादैन्द्रमैन्द्राद्धातृलोकं धातृलोकाद्विरजां तत्र स्नात्वा श्रीसाकेतलोकद्वारमिति ।३।

इति वरुणाधिकरणम् ।

अथातिवाहिकाधिकरणम् ।

## आतिवाहिकास्तल्लिङ्गात् ।४।३।४।

किमेतेऽर्चिरादयोऽध्वनश्चिह्नभूता अथवा भोगस्थानानि आहोस्विद्ब्रह्मप्रेप्सूनामातिवाहिका इति संशयेऽध्वचिह्नभूताश्चैते । कुतः ? लौकिकोपदेशवन्निर्दिष्टत्वात् । अथवा भोगस्थानान्येव । कुतः ? अग्निलोकादिशब्दानां दर्शनात् । इति प्राप्तेऽधीयते—आतिवाहिका इति । ब्रह्मविदामतिवहनकर्तारश्चैते परमात्मना नियुक्ता देवताविशेषाश्चैतेऽर्चिरादयः। कुतः? तल्लिङ्गात् । गच्छतां जनानां गमयितृत्वमेवातिवाहिकत्वम् । तच्च 'स एनान्ब्रह्मगमयती' त्युपसंहारवाक्ये स्पष्टमेव दृश्यते । एतदनुरोधेन पूर्वतनानामप्यातिवाहिकत्वं सिद्धम्। अर्चिरादिशब्दानाञ्चार्चिराद्यभिमानिनिदेवतापरत्वमिति प्रागेवाभिहितम् ।४।

ननु वैद्युतस्यैव पुरुषस्य 'स एनान् ब्रह्म गमयति' इति श्रुतेर्ब्रह्मप्रापकत्वदर्शनात् कथमन्येषामुपरितनानामातिवाहिकत्वमित्यत्राह—

## वैद्युतेनैव ततस्तच्छ्रुतेः।४।३।५।

वैद्युतेन विद्युल्लोकादागतेन अमानवेनैवातिवाहिकेन विद्युत उपरिष्टाद् ब्रह्मविदामाब्रह्मप्राप्तेर्गमनम् । कुतः? तच्छ्रुतेः। 'स एनान् ब्रह्म गमयति' इति तस्यैवाब्रह्मप्राप्तेर्गमयितृत्वश्रुतेः। वरुणादीनामातिवाहिकत्वममानवानुग्राहकतयेति सुगमम् ॥५॥

इत्यातिवाहिकाधिकरणम् ।



॥ अथ कार्याधिकरणम् ॥

## कार्यं बादरिरस्य गत्युपपत्तेः ।४।३।६।

ब्रह्मविदामर्चिरादिमार्गेण गमनमर्चिरादिमार्गस्य स्वरूपञ्च प्रदर्शितम् । इदानीमेतद्विचार्यते । किमयमर्चिरादिको गणः कार्यं हिरण्यगर्भन्तदुपासीनान् गमयति उतपरं ब्रह्मैव ब्रह्मोपासीनान् । आहोस्वित्प्रत्यगात्मानं ब्रह्मात्मकतयोपासीनान् परंब्रह्मेति सन्देहे कार्यमुपासीनानेव कार्यं हिरण्यगर्भं गमयतीति बादरीराचार्यो मन्यते । कुतः ? अस्य परिच्छिन्नहिरण्यगर्भोपासकस्य देशविशेषस्थस्य तत्प्राप्त्यर्थतया गत्युपपत्तेः । सर्वगतस्य सर्वात्मभूतस्य परब्रह्मणः प्राप्तये गत्यनुपपत्तेरिति भावः ।६।

## विशेषितत्वाच्च ॥४॥३॥७॥

पुरुषोऽमानव एत्य ब्रह्मलोकान् गमयति " (बृ० ६।२।१५।) इति श्रुतिस्थबहुवचनान्तेन लोकशब्देन गन्तव्यस्य ब्रह्मणो विशेषितत्वात् । "प्रजापतेः सभां वेश्म प्रपद्ये " इति कार्यब्रह्मणः सभा वेश्मप्राप्त्यनुसन्धानाच्च तत्रैव गतिरुपपद्यते ।७।

अथैवं ' स एनान् ब्रह्म गमयति ' इति निर्देशः कथं ब्रह्माणं बोधयेदित्यत्राह ।

## सामीप्यात्तु तद्व्यपदेशः ॥४॥३॥८॥

' यो ब्रह्माणं विदधाति पूर्वम् ' (श्वे० ६।१८।) हिरण्यगर्भं जनयामास पूर्वम् ' इति हिरण्यगर्भस्य प्रथमजन्यत्वेन ब्रह्मसामीप्यात् ब्रह्मशब्देन व्यपदेश उपपद्यते ॥८॥

ननु हिरण्यगर्भप्राप्तस्य 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन' ( गी. ८।१६। ) इति शास्त्रेण पुनरावृत्तिरभिधीयत इति कथ

मर्चिरादिना गतस्य ' तयोर्ध्वमायन्नमृतत्वमेति ' (का०२।६।१६।) इत्यमृतत्ववचनमुपपद्यतामित्यत्राह–

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ।४।३।९।

कार्यस्य ब्रह्मलोकस्यात्यये नाशे सति तदध्यक्षेण तल्लोकस्वामिना हिरण्यगर्भेणाधिकारिणा सह तत्रैवाधीतविद्यो विद्वान् अतो हिरण्यगर्भलोकात्परं ब्रह्म प्राप्नोति। कुतः? अभिधानात्। ' ते ब्रह्मलोके तु परान्तकाले परामृताः परिमुच्यन्ति सर्वे' (मु० ३।२।६) इति श्रौताभिधानादिति ।९।

## स्मृतेश्च ।४।३।१०।

" ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् " (कू० पु० १ ख० १२।२६७।) इति स्मृतेश्च कार्यब्रह्मोपासकानर्चिरादिगणो नयतीत्यवगम्यते ।१०।

एवं बादरिमतमुक्त्वा जैमिनिमतमभिधत्ते।

## परं जैमिनिर्मुख्यत्वात् ।४।३।११।

' स एनान् ब्रह्मगमयति ' इत्यादौ ब्रह्मशब्दस्य परस्मिन्नेव ब्रह्मणि मुख्यत्वात्परमेव ब्रह्म गमयत्यर्चिरादिको गण इति जैमिनिराचार्यो मन्यते। तात्पर्यानुपपत्तौ हि लक्षणा भवति। नात्र गमनानुपपत्तिर्यतो लक्षणा स्यात्। परब्रह्मणः सर्वगतत्वेऽपि ब्रह्मविदो देशविशेषगमन एव मोक्षनियमात्। ब्रह्मलोकपदेन न तावद्धिरण्यगर्भलोकः शक्योऽवगन्तुम्। तत्र ब्रह्मैव लोको ब्रह्मलोक इति कर्मधारयसमासस्यैव निषादस्थपतिन्यायेन सिद्धान्तितत्वात्। परब्रह्मणः सत्यसंकल्पस्य च तादृशाः स्वेच्छाविरचिता अप्राकृताश्च दिव्यलोका अपि श्रुतिस्मृतीतिहासपुराणादिषु प्रतिपाद्यन्त इति ।११।

## दर्शनाच्च ।४।३।१२।

"एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" (छा०८।३।४।) इति श्रुतिर्दर्शयति मूर्धन्यनाड्या निस्सृतस्यार्चिरादिना ब्रह्मप्राप्तिम् ।१२।

## न च कार्ये प्रत्यभिसन्धिः ।४।३।१३।

यश्चार्चिरादिना गतस्य कार्यब्रह्मणि प्रत्यभिसन्धिः 'प्रजापतेः सभां वेश्म प्रपद्ये' इत्यनया श्रुत्यावगम्यते । सोऽपि परस्मिन्नेव ब्रह्मणि ज्ञेयः । न च कार्ये हिरण्यगर्भे । कुतश्चैतत् । तस्याभिसन्धातुः 'यशोऽहं भवामि ब्राह्मणानाम्' (छा०८।१४।१।) इति वाक्यशेषे सर्वात्मभावाभिसन्धानात् । अतोऽर्चिरादिको गणः परमेव ब्रह्मोपासीनं नयतीति जैमिनिमुनेर्मतम् ।१३।

तदेवं जैमिनेर्मतम्प्रदर्श्येदानीं स्वमतेन सिद्धान्तमाह भगवान् बादरायणः—

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॥४॥३॥१४॥

अर्चिरादिको गणोऽप्रतीकालम्बनान् प्रतीकालम्बनव्यतिरिक्तान् नयतीति भगवान् बादरायण आचार्यो मन्यते । प्रतीकालम्बनान् कार्यब्रह्मोपासकानेव वा नयतीति न नियमः। किन्तु ये परं ब्रह्मोपासते ये च प्रत्यगात्मानं प्रकृतिवियुक्तस्वरूपं ब्रह्मात्मकमुपासते—तथा भूतान्नयतीति नियमः । कथमिदमवगम्यते ? उभयथा च दोषात् । कार्यमुपासीनानिति पक्षे "अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" (छा० ८।३।४। ) इत्यस्याःश्रुतेर्व्याकोपः । परमेवोपासीनानिति पञ्चाग्निविदोऽपि गमनदर्शनात् 'तद्य इत्थं विदु'रित्यादिश्रुतेर्व्याकोप इत्युभयथापि दोषात् । तस्मात्पूर्वोक्त एव नियमः। अत्र दृष्टान्तमाह

तत्क्रतुश्चेति । " यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति " (छा०३।१४।१।) " तं यथा यथोपासते " इति न्यायात् यथोपासकस्तथैव प्राप्नोति । एवञ्च प्रकृतिवियुक्तस्य ब्रह्मात्मकत्वानुसन्धानस्यैव सर्वथोपादेयत्वं तत्क्रतुन्यायात्सिद्ध्यतीति सिद्धान्तः १४।

## विशेषञ्च दर्शयति ॥४॥३॥१५॥

नामादिप्राणपर्यन्तप्रतीकोपासकानां फलविशेषमेव श्रुतिर्दर्शयति "यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति" (छा०७।१।५) इति। अतः परब्रह्मोपासकान् प्रत्यगात्मानञ्च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनांश्चार्चिरादिको गणो नयतीति सिद्धम् ।१५।

इतिकार्याधिकरणम् ।

इति श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये चतुर्थाध्यायस्यः तृतीयपादः ।

---

श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये चतुर्थाध्यायस्य चतुर्थः पादः।

अथ सम्पद्याविर्भावाधिकरणम्

## सम्पद्याविर्भावः स्वेनशब्दात् ।४।४।१।

एवं ब्रह्मविदोऽर्चिरादिना पुनरावृत्तिवर्जितं गमनं तेन च ब्रह्मप्राप्तिमभिधाय मुक्तानामैश्वर्यनिर्णय इदानीं क्रियते। तत्रेदं श्रूयते— " एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते " (छा० ८।१२।२।) अत्र संशयः। किं परज्योतिरुपसम्पन्नस्य कर्मसाध्यदेवादिरूपाभिनिष्पत्तिवत् ब्रह्मविद्यासाध्येन केनापि रूपेण सम्बन्धोऽनया श्रुत्याभिधीयते आहोस्वित्स्वाभाविकस्य स्वरूपस्यैवाविर्भाव इति । तत्र साधनानां सा-

ध्यनिष्पादकत्वदर्शनात् कर्मसाध्यदेवादिरूपसम्बन्धवद्विद्यासाध्येन रूपेण सम्बन्ध एवेति प्राप्तेऽभिधीयते सम्पद्याविर्भाव इति । कर्मफलस्यानित्यत्वेन तद्दृष्टान्तस्यात्रानवकाशात् । अत्र तूपासनरूपविद्यया कर्मरूपाविद्यातिरोहितस्यात्मस्वरूपस्य तिरोधाननिवृत्त्या स्वाभाविकरूपस्याविर्भावो भवत्यतोऽयं प्रत्यगात्माऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्याविद्यातिरोधानविरहितं स्वाभाविकस्वरूपाविर्भावरूपं विद्याफलं प्राप्नोति नत्वपूर्वाकारोत्पत्तिरूपम् । कुतः ? स्वेन शब्दात् । 'स्वेन रूपेणाभिनिष्पद्यते' इति रूपविशेषणेन स्वेनेति कथनेनागन्तुकरूपपरिग्रहस्य व्यावर्तनाद् ।१।

ननु स्वरूपस्य नित्यप्राप्तत्वात्कः पुनः पूर्वावस्थातो विशेषो येन 'उपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति वचनं सार्थकं स्यादित्यत्राह–

## मुक्तः प्रतिज्ञानात् ॥४॥४॥२॥

'स्वेन रूपेणाभिनिष्पद्यते' इत्यनेन कर्मसम्बन्धतत्कृतदेहादिसर्वानर्थविनिर्मुक्तः स्वाभाविकेन रूपेण समवस्थित उच्यते । पूर्वन्तु अवस्थात्रयकलुषितः संसारी चेति विशेषः कर्मरूपाविद्याकृतं यदात्मस्वरूपस्य तिरोधानं तन्निवृत्तिपूर्वकं यः स्वाभाविकस्वरूपस्याविर्भावः सः 'स्वेन रूपेणाभिनिष्पद्यत' इति वाक्यविषयः । कुतश्चैतद्विज्ञायते तत्राह–प्रतिज्ञानात् । "य आत्मापहतपाप्मा विजरः" (छा० ८।७।१।) इति प्रकृत्य 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इत्यनेनाविद्यासम्बन्धकृतजरामृत्युशोकादिसकलदोषविनिर्मुक्तस्यात्मनोऽन्वेष्टव्यत्वं विजिज्ञासितव्यत्वञ्चाभिधाय यस्तादृशमात्मानं विजानाति "स सर्वांश्चलोकानाप्नोति सर्वांश्च कामान्" (छा०८।७।१।) इति तादृशात्मस्वरूपविदः सर्वलोकसर्वकामप्राप्तेः

प्रतिज्ञानात् । तस्मादत्र परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पत्तिः कर्मसम्बन्धनिर्मुक्तिरूपा मुक्तिरेवाभिधीयते स्वाभाविकस्वरूपाविर्भावः स एवास्य जीवात्मन इति ।२।

ननु यस्य स्वेन रूपेणाभिनिष्पत्तिरुक्ता तस्य तत्स्वरूपं किंशब्दवाच्यं किंलक्षणश्चेत्यपेक्षायामाह—

## आत्मा प्रकरणात् ।४।४।३।

अयमात्मा स्वरूपेणापहतपाप्मत्वादिगुणक एव । कुतः? प्रकरणात् । "यआत्मापहतपाप्माविजरो विमृत्युर्विशोकः" (छा.८।७।१) इति प्रकरणादवगम्यते । अयमाशयः,। कर्मसंज्ञयाऽविद्यया तिरोहितस्वरूपः संसारीत्युच्यते । स एव ब्रह्मविद्ययास्माच्छरीरात्समुत्थायार्चिरादिना परज्योतिरुपसम्पद्याविद्यातिरोधाननिवृत्त्याविर्भूतस्वरूपो मुक्त इत्युच्यते । अस्य चात्मनोऽपहतपाप्मत्वादिसत्यसंकल्पत्वान्ता ये गुणा ये च ज्ञानानन्दादयो गुणास्ते संसारदशायां तिरोहिता आसन् । ततस्त एव गुणा विद्यया विनष्टे कर्मबन्धे परज्योतिरुपसम्पन्नस्याविर्भवन्ति ।

तथा चोक्तम्—' यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः ।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ।। वि.ध.१०४।५५।
यथोदपानकरणात्क्रियते न जलाम्बरम् ।
सदेव नीयते व्यक्तिमसतः सम्भवः कुतः? ।वि० ध० १०४।५७
तथा हेयगुणध्वंसादवबोधादयो गुणाः।
प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते ।वि०ध०१०४।५७
इति । तस्मात्सम्पद्याविर्भाव इति युक्तमुक्तम् ।३।

इति सम्पद्याविर्भावाधिकरणम् ।

अथ अविभागेनदृष्टत्वाधिकरणम् ।

## अविभागेन दृष्टत्वात् ॥४॥४॥४॥

किमयं परंज्योतिरुपसम्पद्य प्रक्षीणकर्मबंधः प्रत्यगात्मा ब्रह्म-विभागेन तिष्ठत्याहो स्विदविभागेनेति संशये 'पृथगात्मानं प्रेरि-तारं च मत्वाजुष्टस्ततस्तेनामृतत्वमेति । (श्वे०।१।६) इति स्वस्मात्पृ-थङ्मत्वा सेवितात्परमात्मनः पृथक्त्वेन जीवस्थितेःसत्वात् ब्रह्म-विभागेनावतिष्ठत इति प्राप्तेभिधीयते—अविभागेनेति । 'अजो ह्येको जुषमाणोऽनु शेते' (श्वे०।४।५) इति जीवस्याजत्वेन नित्य-त्वात् । 'आकाशवत्सर्वगतश्च नित्यः' 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' 'अयमात्मा ब्रह्म' 'य आत्मनि तिष्ठ-न्नात्मनोऽन्तरः' (बृ० ३।७।२२) इत्याद्यासु श्रुतिष्वात्मपरमात्मनोर्व्या-प्यव्यापकत्वनियम्यनियन्तृत्वश्रवणाद्व्याप्यनियम्यस्वरूपस्थितिप्रवृ-त्योस्तद्व्यापकनियन्त्राधीनत्वोपपत्तेः। व्याप्यस्य व्यापकापृथक्सिद्धेश्च व्याप्यव्यापकयोरविभागेन स्थित्युपपत्तेस्तस्माद् 'अहं ब्रह्मास्मि' इति व्यपदेशादविभागेनैव तिष्ठतीति ।४।

इत्यविभागेन दृष्टत्वाधिकरणम् ।

---

अथ ब्राह्माधिकरणम्

---

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः॥४॥४॥५॥

पूर्वं परं ज्योतिरुपसम्पद्य निवृत्तावविद्यातिरोधानस्यात्मनः स्व-रूपाविर्भावो भवतीत्यभिहितम् । तत्र येन स्वरूपेणाविर्भूय तिष्ठति तत्स्वरूपं मतभेदेन विचार्यते । किमयं जीवोऽपहतपाप्मत्वादिना-विर्भूय तिष्ठति, उत चैतन्यस्वरूपेणाहोस्विदविरोधादुभयस्वरूपेणाहो स्विदविरोधादुभयस्वरूपेणेति संशये जैमिनिराचार्यस्तु ब्राह्मेणा

पहतपाप्मत्वादिना स्वरूपेणेति मन्यते । कुतः? उपन्यासादिभ्यः । दहरवाक्यावगतापहतपाप्मत्वादयो हि ब्रह्मगुणाः प्रजापतिवाक्येऽप्यात्मनो गुणतया 'य आत्मापहतपाप्मेत्यारभ्य' सत्यसंकल्पः' इत्यन्तेन वाक्येनोपन्यस्यन्त इति । तस्मात्प्रत्यगात्मनः स्वरूपतो गुणतश्चापहतपाप्मत्वादिकमेवोपपद्यते न विज्ञानमात्रस्वरूपत्वमिति जैमिनेर्मतम् ।५।

## चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः।४।४।६।

"एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" (बृ०४।५।१३) इत्याद्यनेकश्रुतिभ्यः प्रत्यगात्मनस्तदात्मकत्वात्प्रज्ञानघनात्मकत्वाच्चैतन्यमात्रस्वरूपत्वात् । चिति तन्मात्रेण रूपेणायमवतिष्ठत इत्यौडुलोमिराचार्यो मन्यते ।६।

एवं मतद्वयम्प्रदर्श्य बादरायणो भगवान् स्वमतं सिद्धान्तयति—

## एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः।४।४।७।

एवमपि—आत्मनो विज्ञानमात्रस्वरूपत्वाङ्गीकारेऽपि तत्र अपहतपाप्मत्वादीनां प्रकरणावगतानां गुणानामविरोधं बादरायणो भगवान् मन्यते । कुतो विज्ञायते । उपन्यासात्पूर्वभावात् । 'अपहतपाप्मे' त्यादिश्रौतवचनोपन्यासात्प्रमाणात् । पूर्वेषामपहतपाप्मत्वादिगुणानामपि भावाद्विद्यमानत्वात् । चेतनस्वरूपविरोधिपाप्मत्वादिदुष्टगुणनिषेधेनापहतपाप्मत्वादीनां चेतनस्वरूपप्रकाशकानां गुणानामविरोधादिति भावः। तदेवमपहतपाप्मत्वादीनां स्वरूपधर्मतया नाविद्यापरिकल्पितत्वम् । उभयोर्वास्तविकत्वेव विनिगमनाविरहादुभयगुणवत्त्वमेव । यथा च रसनेन्द्रियेणावगतस्य कृत्स्नस्य सैन्धवघनस्य रसमयत्वेन चक्षुराद्यवगततद्रूपकाठिन्यादिभिर्न विरोधः । तथैव 'कृत्स्नः प्रज्ञानघन एव' इति वाक्यावगतेनात्मनो विज्ञान-

घनस्वरूपेण 'य आत्मापहतपाप्मा' इत्यादिवाक्यावगतापहतपाप्मत्वादिधर्माणामविरोध इति ।७।

इति ब्राह्माधिकरणम् ।

अथ संकल्पाधिकरणम् ।

## संकल्पादेव तच्छ्रुतेः ॥४॥४॥८॥

एवं ब्रह्मोपसम्पत्त्यनन्तरं मुक्तात्मनोऽपहतपाप्मत्वादिसत्यसंकल्पत्वान्तगुणकत्वमाविर्भवतीत्यमिहितम् । इदानीं स एव मुक्तात्मा सांकल्पिकान्विषयाननुभवतीति छान्दोग्येऽभिधीयते । "स तत्र पर्येति जक्षन्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा" (छा० ८।१२।३) इत्यादिना। अत्रायं संशयः। किं मुक्तात्मप्रयत्नान्तरजन्येयं स्त्र्यादीनामुपस्थितिराहोस्वित्परमात्मनइवसंकल्पादेवेति । तत्र लोके कार्यमात्रस्य तत्तत्पुरुषप्रयत्नजन्यत्वदर्शनादस्यामपि मुक्तात्मनः प्रयत्नान्तरसाध्यत्वमेव स्यादिति प्राप्तेऽभिधीयते–संकल्पादेवेति । संकल्पादेवास्य सर्वकामावाप्तिः । कुतः ? तच्छ्रुतेः। "स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति" (छा० ८।२।१) इति संकल्पादेव पित्रादिसमुत्थितिः श्रूयते । एवकारः साधनान्तरनिरपेक्षतां द्योतयति । संकल्पमात्रादेव सर्वकामावाप्तिरिति निर्गलितोर्थः।८।

## अत एव चानन्याधिपतिः ४॥४॥९॥

अतः सत्यसंकल्पादेव अनन्याधिपतिः–नास्त्यन्यः पुरुषः कर्मादिर्वा नियामकः संकल्परोधको यस्य तादृशो भवति।

इदन्तु युक्तम् । ब्रह्मोपासनयैवास्य सत्यसंकल्पत्वादिसिद्धिरिति न ब्रह्माधिपत्यमत्र वार्यते किन्तु तदतिरिक्तस्य कस्यचिदप्याधिपत्यं नास्तीत्यभिधीयते । अत एव 'स स्वराड् भवति' (छा०७।२५।२) इत्यभिहितम् ॥९॥

इति संकल्पाधिकरणम् ॥

॥ अथाभावाधिकरणम् ॥

## अभावं बादरिराह ह्येवम् ।४।४।१०।

इदानीं मुक्तात्मनः संकल्पसत्वात्तस्य शरीरेन्द्रियादिविषये विचार्यते–किं मुक्तात्मनः शरीरेन्द्रियाणि सन्ति नवेति संशये शरीरेन्द्रियाणामभावं बादरिराचार्यो मन्यते। कुतश्चैवम्? आह ह्येवम् । 'न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वा वसन्तं न प्रियाप्रिये स्पृशतः (छा० ८।१२।१) इति मुक्तस्य शरीराभावमभिधत्ते । संकल्पस्य मनोऽधीनत्वान्मनोऽतिरिक्तानामिन्द्रियाणाम भाव इति मतम् ।अत एव "मनसैतान् कामान् पश्यन् रमते । य एते ब्रह्मलोके" (छां० ८।१२।५।६।) इति श्रुतिः संगच्छते ॥

## भावं जैमिनिर्विकल्पामननात् ४॥४॥११॥

जैमिनिराचार्ये मुक्तस्य शरीरेन्द्रियाणां भावं मन्यते । कुतः? विकल्पामननात् 'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा' छा० ७।२६।२) इति विविधभावस्य कथनात् शरीरस्य भावमस्तीत्यवगम्यते । 'अशरीरं वाव सन्त'मिति श्रुतिस्तु कर्मादिनिमित्तकशरीराभावमभिधत्त इति ।११।

एवं मतद्वयम्प्रदर्श्य स्वकीयं सिद्धान्तमविष्कारोति भगवान बादरायणः–

## द्वादशाहवदुभयविधं बादरायणोऽतः ।४।४।१२।

अत एव संकल्पादेवोभयविधं शरीरेन्द्रियादिसहितं तद्रहितञ्च मुक्तं जीवं मन्यते भगवान् बादरायणः । द्वादशाहवत् । यथा 'द्वादशाहमृद्धिकामा उपेयु'रित्युपैति चोदनया द्वादशाहस्य सत्रत्वम् ' द्वादशाहेन प्रजाकामं याजयेत् ' इति यजति चोदनया च तस्यैवाहीनत्वं भवति । तथा संकल्पवैचित्र्यादत्राप्युभयविधम् ।१२।

शरीरीरेन्द्रियरहितस्य कथं भोगोपपत्तिरित्यपेक्षायामाह—

## तन्वभावे सन्ध्यवदुपपत्तेः ४॥४॥१३॥

स्वसंकल्पसृष्टतन्वाद्युपकरणाभावे सन्ध्यवदुपपत्तेः स्वप्नभोगवदीश्वरसृष्टैरुपकरणैर्भोगोपपत्तेः । अयम्भावः । करणकलेवराद्यभावेऽपि मुक्तः परमात्मप्रदत्तैस्तैस्तैरेव पितृलोकादिभिश्च लीलारसमनुभवति ॥१३॥

## भावे जाग्रद्वत् ।४।४।१४।

स्वसंकल्पेन प्राप्तकरणकलेवरादिभावे पितृलोकादिविषयसद्भावे च जाग्रज्जीवभोगवन्मुक्तपुरुषः स्वप्नभोगविलक्षणं लीलारसमनुभवति ।१४।

नन्वात्मनोऽणुत्वात् ' स एकधा भवति त्रिधाभवति ' इत्यादिप्रोक्तेष्वनेकशरीरेषु व्याप्त्यनुपपत्तेर्नानेकैर्निरात्मकैः शरीरैर्मुक्तस्य भोग उपपद्यत इत्यत्राह—

## प्रदीपवदावेशस्तथाहि दर्शयति ४।४।१५।

यथैकस्मिन्प्रदेशे समवस्थितस्यैकस्यैव प्रदीपस्य स्वप्रभाद्वारा वेशः यथा चैकस्मिन्नपि देहे हृदयाद्येकदेशावस्थितस्यात्मनश्चैतन्यव्याप्त्या सर्वस्मिन्नपि शरीर आत्माभिमानस्तथा मुक्तस्याप्यनेकशरीरेषु समान एवात्माभिमानो व्यवहारश्च । एतदुक्तम्भवति । बद्धानां

जीवानामनादिकर्मणा संकुचितज्ञानत्वाद्देहान्तरे चैतन्यद्वारा व्याप्तिर्न भवति स्वदेहे तु तेषामावेशोऽस्त्येव । मुक्तानान्तु परमात्मोपासनयाऽपिगतकर्मबन्धानां परमात्मानुग्रहेणासंकुचितज्ञानत्वात् स्वदेहवद्देहान्तरेऽपि व्याप्तिरुपपद्यते । तेन च सर्वोऽपि व्यवहारः सम्यगुपपद्यते। तथा हि दर्शयति । " बालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते " (श्वे०५।७।) तथा च स्वसंकल्पेनैव मुक्तस्य सर्वमुपपद्यते इति न कश्चिद्दोषः । १५ ।

ननु "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किंच न वेद नान्तरम्" (बृ०४।३।२१) इत्येषा श्रुतिर्मुक्तस्य बाह्यान्तरज्ञानाभावं वदत्यतः कथं तस्य सर्वज्ञत्वमुच्यत इत्यत्राह ।

**स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ।४।४।१६॥**

एतज्ज्ञानाभाववचनं स्वाप्ययसम्पत्त्योरन्यतरापेक्षं न तु मुक्तिविषयकम् । स्वाप्ययः सुषुप्तिस्तत्र ज्ञानाभावः श्रुत्यन्तरेऽपि प्रतिपाद्यते "नाहं खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति" (छा०८।११।२) इति । तथा 'वाङ्मनसि सम्पद्यते' इत्यादिदर्शनात् सम्पत्तिर्मरणं तत्रापि ज्ञानाभावः श्रुतौ प्रतिपादितः एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति" (बृ०२।४।१२) इति । मुक्तस्य हि सार्वज्ञ्यं श्रुतावाविष्कृतम्–"स वा एष दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते । य एते ब्रह्मलोके" (छा०८।१२।५।६) इति मुक्तावस्थायां सर्वविषयकं ज्ञानं स्पष्टमेवाविष्कृतम् । तस्मात्संकल्पेनैव मुक्तस्य शरीरेन्द्रियादीनां सत्त्वमसत्त्वं सर्वज्ञानाश्रयत्वञ्चेति सिद्धम् ।१६।

इत्यभावाधिकरणम् ।



अथजगद्व्यापारवर्जनाधिकरणम् ।

## जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ।४।४।१७।

पूर्वं संकल्पमात्रेण मुक्तस्य सर्वकामावाप्तिरभिहिता । अनन्याधिपतित्वञ्चोक्तम् तथा सतीदमिदानीं विचार्यते । किं मुक्तस्य संकल्पमात्रेण परमपुरुषस्येव सर्वेश्वरत्वमपि प्राप्यत आहोस्वित्सर्वकामप्राप्तिरूपमैश्वर्यमेवेति संशये सर्वजगतामीश्वरत्वमपि । कुतः ? मुक्तत्वानन्याधिपतित्वेनार्थात्सर्वाधिपतित्वोपपत्त्या परमेश्वरस्येव सर्वनियन्तृत्वोपपत्तेः । " निरञ्जनः परमं साम्यमुपैति" इति परमपुरुषसाम्यापत्तिश्रवणाज्जगत्सृष्ट्यादिकर्तृत्वमपि मुक्तस्य सम्भवतीति प्राप्तेऽभिधीयते—जगद्व्यापारवर्जमिति । जगद्व्यापारो जगदुत्पत्त्यादिकर्तृत्वं तेनाशेषचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदनियमनं तद्वर्ज्जमविद्यातिरोधानराहित्यपूर्वकपरब्रह्मानुभवरूपम् ' सोऽश्नुते सर्वान् कामान् सह ब्रह्मणे'तिश्रुत्यभिहितसंकल्पमात्रेण सर्वकामावाप्तिरूपं मुक्तस्यैश्वर्यमस्ति । न तु जगदीश्वरत्वमपि तत्तु परमपुरुषस्यासाधारणम् । कुतः? प्रकरणात् । " यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" ( तै० ३।१ ) इति परमात्मानमेव प्रकृत्याम्नातम्—नतु मुक्तात्मानम् । एवं " तदैक्षत बहु स्याम्प्रजायेयेति तत्तेजोऽसृजत " ( छा० ६।२।३ ) इत्यादि प्रकरणान्तरेष्वपि ज्ञेयम् । असन्निहितत्वाच्चापि मुक्तस्य । नहि जगन्नियमनादिषु मुक्तस्य सान्निध्यमप्यस्ति । येन तस्याप्ययं व्यापारः स्यात् ।१७।

## प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः। ४।४।१८।

ननु च "स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति" (छा० ७।२५।२) इत्यादौ प्रत्यक्षेणैव स्वातन्त्र्योपदेशा मुक्तस्य निरंकुशमैश्वर्यं स्यादितिचेन्न, आधिकारिकमण्डलस्थोक्तेः। अधिकारे नियुक्तानां हिरण्यगर्भादीनां लोकेषु स्थितान् भोगान्प्रति मुक्तस्य कामचारत्वोक्तेः विमुक्तबन्धो मुक्तो ब्रह्मविभूतिभूतेषु हिरण्यगर्भादीनां विकारलोकेषु यथासंकल्पं विहरतीति तदर्थः। नहि तेन वाक्येन जगद्व्यापारोऽपि मुक्तस्यास्तीति प्रतिपाद्यते ।१८।

तर्हि संसारिवन्मुक्तस्यापि विकारान्तर्वर्तिभोगभोक्तृत्वाद्बद्धस्येव मुक्तस्यापि भोग्यं क्षयिष्णु नश्वरञ्च स्यादित्यत्राह—

## विकारावर्ति च तथा हि स्थितिमाह ।४।४।१९।

चकारः पूर्वोक्तहिरण्यगर्भादिलोकभोगसमुच्चयार्थकः। न केवलमाधिकारिकलोकस्थानेव भोगाननुभवति मुक्तोऽपि तु विकारे—जन्मादिके न वर्तत इति निरस्ताखिलविकारं निरवधिककल्याणगुणसागरं परंब्रह्म सविभूतिकमप्यनुभवति। तथा हि मुक्तस्य परमात्मनि सर्वात्मकेऽनन्तकल्याणगुणेऽनुभवितृत्वेन स्थितिमाह श्रुतिः—"यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति" (तै० २।७) "रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति" (तै० २।७) इति।

अयमभिसन्धिः—अस्य चिदचिन्मिश्रस्य जगतः परमात्मविभूतित्वात्सर्वाधारे परमपुरुष एव जगत्स्थितिः "सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" (छा० ६।८।४) "तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" (का० २।५।८) इत्यादिश्रुतेः एवञ्च मुक्तस्यापि ब्रह्मनिष्ठत्वात्सविभूतिकं ब्रह्मानुभवन्नाधिकारिकलोकभोगानप्यनुभवति मुक्तः। तदेव 'स स्वराड् भवति' इत्यादिश्रुत्याभिधियते न तु सृष्ट्यादिकर्तृत्वम् ।१९।

## दर्शयतश्चैवं प्रत्यक्षानुमाने ।४।४२०।

जगत्सृष्टिनियमनादिरूपो व्यापारस्तु परमात्मन एवेति दर्शयतश्चैवमेव श्रुतिस्मृती "सविश्वकृद्विश्वविदात्मयोनिः (श्वे० ६।१६) "स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किञ्च। तत्सृष्ट्वा तदेवानुप्राविशत्" (तै० २।६) एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय" (बृ० ४।४।२२) "एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" (बृ० ३।८।९) "य ईशेऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय" (श्वे० ६।१७) "भयादस्याग्निस्तपति भयात्तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः" (का० २।६।३) इत्यादिका श्रुतिः। तथा स्मृतिरपि "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते" (गी० १०।८) "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" (गी० १०।४२) तस्मान्मुक्तस्यैश्वर्यं जगद्व्यापारवर्ज्जमिति ।२०।

## भोगमात्रसाम्यलिङ्गाच्च ।४।४।२१।

"सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" (तै० १।२) इति मुक्तस्य ब्रह्मणा सह भोगमात्रेण साम्यं श्रूयते नतु जगद्व्यापारेणाऽपि। तस्माल्लिङ्गाज्जगद्व्यापारवर्ज्जमेव मुक्तस्य सत्यसंकल्पतया सर्वेषु लोकेषु कामचारत्वमिति ।२१। ननु परमात्मसंकल्पायत्तमेव मुक्तस्यैश्वर्यं यदि स्यात्तर्हि कदाचित्तदिच्छया पुनरावृत्तिरपि मुक्तस्याभ्युपेयेत्यत्राह—

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ।४।४।२२।

ध्यानोपासनवेदनादिशब्दवाच्यया परमपुरुषैकचिन्तनलक्षणयानन्यभक्त्या प्रसन्नेन परमपुरुषेणार्चिरादिना ब्रह्मलोकं नीतस्य

मुक्तस्यानावृत्तिरेव "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते न च पुनरावर्तते" ( छा० ८।१५।१ ) इत्यादिवैदिकशब्दादवगम्यते ।

एवं स्वानन्यभक्तस्यानावृत्तिः स्वयम् गीताचार्येण भगवताऽप्यभिहिता—

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमं गताः ।। गी० ।८।१५।

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय ! पुनर्जन्म न विद्यते ।।गी०। ८।१६।

नहि सम्यगाराधितपरमपुरुषचरणस्य अत एवावाप्तसमस्तकामस्य सर्वदा नित्यनिरतिशयानन्दमनुभवतो मुक्तस्य कथञ्चिदपि जन्मजरामरणादिदुःखसंकुले सातिशयसुखे जगति जायते पुनरावर्तनक्लेशलेशः । न वाखिलवात्सल्यसौजन्यसौशील्यकारुण्यजलधिर्भगवान्भक्तजनानुकम्पापरायणः परमपुरुषः श्रीरामचन्द्रः परमात्मा स्वानन्यभक्तं ज्ञानिनं स्वलोकमानीय कर्हिचिदप्यावर्तयिष्यति । यतः स्मर्यते स्वाश्रितजनमनन्यभक्तमुद्दिश्य तस्य परमकारुणिकस्य परमपुरुषस्य सर्वस्मादुत्कृष्टेयम्प्रतिज्ञा ' अप्यहं जीवितं जह्याम् " ( वा० आ० १०।१८ )

सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम । वा० यु० ।

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोत्यर्थ महं स च मम प्रियः । गी० ७।१७।

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।

आस्थितः सहि युक्तात्मा मामेवानुत्तमां गतिम् । गी० ७।१८।
अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् । गी० ९।२२।

तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ।
भवामि नचिरात्पार्थ ! मय्यावेशितचेतसाम् । गी० १२।७।

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः । गी० १२।८।

तस्मात्परमपुरुषमुपसम्पन्नस्य मुक्तस्य पुनरावृत्तिर्न भवतीति सिद्धान्तः । सूत्रावृत्तिः शास्त्रसमाप्तिं गमयति ।

इति जगद्व्यापारवर्जाधिकरणम् ।

इति श्रीभगवद्रामानन्दाचार्यप्रणीते शारीरकमीमांसाया आनन्दभाष्ये चतुर्थाध्यायस्य चतुर्थः पादः ।

। समाप्तश्चाध्यायः ।

परिसमाप्तञ्च शास्त्रम् ।

मायावादिकुतर्कजालरचितव्याख्यानसंमूर्छितां-
यो व्याख्यासुधया त्रयीं भगवतीं सञ्जीवयन् राजते ।
तस्याचार्यशिरोमणेर्विजयिनो वादाहवे श्रीमतो-
रामानन्दमुनेर्वचोऽखिलजगत्क्षेमाय सञ्जायताम् ॥१॥

॥ श्रीमते रामानन्दाय नमः ॥

# शुद्धि पत्रम् ।

| पृष्ठ | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | ८ | ब्रह्मणो | ब्राह्मणो |
| ,, | १८ | श्यति ध्या | श्यते निष्कलंध्या |
| ४ | ३ | नीयनि | नीयंनि |
| ,, | ७ | णप्राधा | णप्रधा |
| ,, | ८ | परपुरु | परमपुरु |
| ,, | १६ | शद्वेन | शब्देन |
| ५ | ५ | गन्तव्यो | मन्तव्यो |
| ,, | १३ | तीयंग्रहा | तीयग्रहा |
| ,, | १६ | लभ्ये | लम्भे |
| ६ | १२ | चेत्यवग | चावग |
| ,, | १५ | तदुद्भवस्य | तदुद्भवश्च |
| ,, | २४ | अथभयं | अथ तस्य भयं |
| ७ | १३ | २।१।१५ | २।१।१४ |
| ८ | १४ | तदेतनादि | तदेतदनादि |
| ८ | १५ | स्वशतेन | स्ववशेन |
| ,, | २३ | रूढेश्रद्धा | रूढेः श्रद्धा |
| ९ | २ | द्वेतता | द्वैते ता |
| ११ | २३ | तपरमत्र | तपदमत्र |
| १२ | ३ | तो ज्ञानं | तोऽज्ञानं |
| ,, | १६ | हि-ज्ञानस्य | हि-अज्ञानस्य |
| १६ | १९ | रम्भणब्दा | रम्भणशब्दा |
| ,, | २३ | मात्मापर | मात्मपर |
| २२ | १० | कल्पते | कल्प्यते |
| ,, | ११ | तत्र | अन्यत्र |
| ,, | ११ | रजतेसर्पादि: | रजतसर्पादि: |
| २४ | २१ | सेन श्रा- | सेन तत्रा- |
| २९ | १५ | पराविश्य | परविश्य |
| ३२ | १९ | क्यस्थातु | क्यस्यातु |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३५ | ७ | भावती | भगवतो |
| ,, | १४ | स्थूलबध्या | स्थूलबुध्या |
| ,, | १५ | मशक्ये | मशक्यं |
| ,, | २३ | विकारहितं | विकाररहितं |
| ३६ | १७ | न हि भ | न हि भ्रान्तिर्भ |
| ,, | १७ | भवति भ्रा | भवति नवा भ्रा |
| ३७ | १५ | नन्वनव | नन्वव |
| ३८ | ५ | दुर्वार एवे | दुर्वाद एवे |
| ४० | २४ | शक्तिमत्सा- | शक्तिसा |
| ४१ | १५ | *त्य | तैत्य |
| ४१ | १७ | स्यतःपर | स्य पर |
| ४३ | १८ | रोऽध्या | रोऽयोध्या |
| ४४ | ९ | कश्चित्स्फोटा | स्फोटा |
| ४५ | ११ | ज्ञःसस र्व- | ज्ञः सर्व |
| ४६ | ८ | सर्वस्य | सर्वस्था |
| ४७ | २४ | शब्दार्थास | शब्दार्थस |
| ५२ | ५ | ॥ वै० सं० | ॥ सन० सं० |
| ,, | ८ | ॥ वै० सं० | ॥ सन० सं० |
| ,, | १० | ॥ वै० सं० | ॥ सन० सं० |
| ५८ | २१ | सद्विधाप्र | सद्विद्याप्र |
| ६० | ३ | तदेव | सदेव |
| ६१ | २ | याः सर्वे | यः सर्वे |
| ,, | २१ | न्विच्छद्धिः | न्विच्छाद्धिः |
| ६९ | १४ | म्यपमृतः | म्यमृतः |
| ७३ | १६ | ज्ञससर्व | ज्ञः सर्व |
| ७५ | १९ | ( श० ता० ) | ( रा० ता० ) |
| ,, | २० | मुषपद्य | मुपपद्य |
| ,, | २३ | मृणाधि | णाधि |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७८ | १२ | ज्ञ वजावीश | क्षौद्रावजावीशा |
| ७९ | १२ | सृष्टयाविधा | सृष्टयभिधा |
| ८२ | १० | स्पर्शत्त्व | स्पर्शवत्त्व |
| ९२ | ३ | नन्द्रान्देश्च | नन्दादेश्च |
| ९३ | २५ | सन्धा नाम | सन्धानम् |
| १०३ | ५ | शैयंमस्तस्य | शैयंस्तस्य |
| ,, | ७ | १।२।८। | १।२।९। |
| १०५ | ७ | दुर्दशं | दुर्दर्शं |
| ,, | २२ | स्तदपित | स्तदर्पित |
| १०६ | ८ | वस्तंदेव | वस्तं देव |
| १०९ | १९ | गत्समिधा | गत्यभिधा |
| ११३ | १ | १।२।१० | १।२।२० |
| ,, | ४ | प्यद्वश्यत्वा | प्यदृश्यत्वा |
| ,, | १५ | १।२।११ | १।२।२१ |
| ११४ | ६ | १।२।१२ | १।२।२२ |
| १२२ | १ | मष्ठत | मञ्जुष्ठत |
| १२९ | १९ | याथार्थ्य | यथार्थ |
| १३१ | २ | धृते | धृतेः |
| १३२ | १४ | ताज्ञात्व | ताज्ञत्व |
| १३४ | १९ | ते सर्व | ते सर्वे |
| ,, | २४ | पत्तेध्या | पत्तेर्ध्या |
| १३८ | २५ | भिष्टमृद्धीयमानं | भिधीयमानंदष्टं |
| १४३ | २२ | ज्ञः स सर्व | ज्ञः सर्व |
| १५० | ९ | न्यौरज्ञात्वं | न्यैरज्ञातत्त्वं |
| १५१ | ३ | तिष्ठति | तिष्ठेदिति |
| १५२ | १७ | नन्द्रास्य | नन्दस्य |
| ,, | २२ | पत्ते दर्श | पत्तेर्दर्श |
| १६० | २५ | तुस्यातस्या | स्यात्तस्या |
| १७७ | २५ | पृष्ठन् टवा | पृष्टवाम् |
| १८४ | २१ | समास: | समासः |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १९८ | २५ | च्याज्ञात | च्यत इति |
| २१२ | १८ | त्वाजत्वा | त्वाज्ञत्वा |
| ,, | २१ | पदार्थ पर्य | पदार्थे पर्य |
| २१४ | १० | रिच्यते | रिच्यन्ते |
| २१५ | १ | चिचिद्ध | चिदचिद्व |
| २२९ | १३ | शब्दवच्य | शब्दवाच्य |
| २३२ | २ | कतर्तृत्वा | कर्तृत्वा |
| ,, | १६ | न्यप्रतिषे | न्यविप्रतिषे |
| ,, | १९ | स्याभेदे | स्याभेद |
| २३३ | २३ | संयुज्यमाना | संयुज्यमाने |
| २३७ | १३ | धर्मीमना | धर्मी ना |
| २३९ | ११ | पनित्प्र | पनिषत्प्र |
| २४३ | २३ | तर्त | तर्तं |
| २४७ | १४ | पश्चेत्त | पत्तेश्च |
| २५१ | ९ | रेरेण | रवेण |
| २५६ | ४ | सैवैक | तस्या एवैक |
| २६१ | १४ | त्वाजीव | त्वाज्जीव |
| ,, | १६ | तस्माका | तस्मादाका |
| २६२ | १७ | तच | तच्च |
| २६४ | १६ | दण्ड- | दणु- |
| २७१ | १९ | समाध्यावमाश्च | समाध्यभावाच्च |
| २७२ | ७ | कार्यस्वेति | कार्यस्य वेति |
| २७६ | २३ | सत्रंदा | सर्वदा |
| २७७ | २० | तोत्र | तोऽभयोत्र |
| २७९ | ३ | नेर्व परः | नैवं परः |
| २७९ | २४ | श्रऽतोयप गृ | श्रुतयःपरिगृ |
| २८० | २० | पङ्क्तेःपश्चायोज्यम् (अदृष्टानियमात् । २।३।५१) इति | |
| २८१ | ८ | थत्सिद्ध | थकृसिद्ध |
| ३०० | ९ | यन्ने" | यन्ते" |

| पृष्ठे | पंक्तौ |
|---|---|
| १०२ | २३ |
| १०४ | १६ |
| १११ | १९ |
| ११६ | २ |
| १२१ | १७ |
| ,, | २२ |
| १३१ | २० |
| १३२ | १ |
| ,, | १४ |
| १३३ | ५ |
| १३४ | २ |
| १३८ | १३ |
| १४१ | ७ |
| १४३ | २ |
| ,, | १३ |
| १४८ | १४ |
| १५५ | ८ |
| १५६ | ११ |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३०२ | २३ | यवंत | यत्तत्वं |
| ३०४ | १६ | यवस्थान | यस्थान |
| ३११ | १९ | गाद्वः प्र | गाद्भेः प्र |
| ३१६ | २ | जीवस्यैव | जीवस्येव |
| ३२१ | १७ | तद्मैत | तद्वैत |
| ,, | २२ | लभ्यते | लभ्यन्ते |
| ३३१ | २० | कर्तृमत्व | कर्तृकर्मत्व |
| ३३२ | १ | यस्त्वात् ॥ | यस्त्वादिवत् ॥ |
| ,, | १४ | तथतेरा | तथेतरा |
| ३३३ | ५ | हत्युयास्य | इत्युपास्य |
| ३३४ | २ | ब्रह्मागुण | ब्रह्मगुण |
| ३३८ | १३ | णा स्यर्धितु | णा स्पर्धितुं |
| ३४१ | ७ | यर्थ्यंयेव | यर्थ्यमेव |
| ३४३ | २ | स्मृतिः स्मृतिः | स्मृतिः |
| ,, | १३ | धाश्वर | धाम्बर |
| ३४८ | १४ | तितवबुद्धिः | तितत्त्वबुद्धिः |
| ३५५ | ८ | मयक | मयकत्वङ्ग |
| ३५६ | ११ | एयाम | एषाम |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | १२ | त्वङ्गत्व | त्वङ्गत्व |
| ३५८ | ८ | शब्दाश्वा | शब्दथ्व |
| ३६७ | २१ | र्हस्थत्या | र्हस्थ्यत्या |
| ३६८ | २१ | र्कृणव्रतानि | र्कृणैर्कृणवानि |
| ३७१ | २१ | स्फुयति | स्फुटयति |
| ३७५ | १६ | त्यद्याप | त्ययाप |
| ३८४ | २० | हत्यत्र | इत्यत्र |
| ,, | २३ | लः स्तु- | लः स्व· |
| ३९२ | २१ | ध्यायती | ध्यायन्ती |
| ३९५ | ४ | क्षीथते | क्षीयते |
| ,, | १३ | मश्लेषः | मसंश्लेषः |
| ४०२ | १८ | विशेशषान्ता | विशेषान्ता |
| ४१३ | १८ | रावूर्ध्वं | रादूर्ध्वं |
| ४१४ | १४ | येऽवली | ये बली |
| ४२२ | २१ | निवृत्तावबि | निवृत्ता वि |
| ,, | २४ | पंक्तौ "ह्रोस्विदविरोधादुभयस्वरू-पेणा" इति त्याज्यम् | |
| ४३१ | ७ | परमं | प'मां |

इति शुद्धिपत्रम् ।

સમરીતિર્મહાતેજાઃ પરબ્રહ્મ સનાતનઃ |
જાયતાંજ્ઞાનકી નાથો વેદવેદ્યો મહામતિઃ ||
Ankur Nagraj

एतद्भाष्यमधोदर्शितेषु स्थानेषु लभ्यम्

(१) स्वामी पं. श्रीरामवल्लभाशरणजी महाराज

जानकीघाट—अयोध्या.

(२) महन्त श्रीरामशोभादासजी महाराज

श्रीमणिरामजीकी छावनी—अयोध्या.

(३) स्वामी श्रीरघुवरदासजी वेदान्ती

दर्शननिधि

उंझा. (उत्तर गुजरात)

(४) महन्त श्रीप्रेमदासजी महाराज

वैद्यविद्यावि शारद

मोटामन्दिर–पालनपुर.

# श्रीरामतापिनीयोपनिषत्श्रीमदानन्द भाष्ययोर्मुद्रणसाह्यप्रदा-यिनामुपकारंस्मरामः

| रु० | नाम |
|---|---|
| १३५) | श्रीहनूमान गढ़ी से |
| १०५) | राजगोपालम०रामदासजी |
| १०२) | श्रीरामवल्लभाशरणजी सत-गुरुसदन |
| १०३) | श्रीगोमतीदासजी हनूमत निवास |
| १५१) | महन्त रामशोभादासजी मनीरामजी की छावनी |
| १७८) | पं० श्री रामवल्लभाशरणजी जानकी घाट, |
| १०१) | महन्त ईश्वरदासजी बड़ी छावनी |
| ५०) | महन्त रामप्रियाशरणजी श्रावण कुञ्ज |
| ५१) | महन्त विदेही जी के |
| ५०) | विजावरकी बड़ीरानी सा० |
| ३०) | सीतारामीय महन्त मथुरा दासजी गुजरात |
| २८) | महन्थ रामरंगी लेशरण मैहर |
| २५) | ,, रघुवीरदासजी जमात |
| ११) | भागीरथदासजी |

| नाम | रु० |
|---|---|
| म० सुखरामदासजी नयाघाट | १०) |
| ,, रामलखनदासजीविद्याकु० | २०) |
| ,, रामऔतारदासजी भीनुजीकी बगिया | १०) |
| रामायणी श्रीरामबालकदासजी बड़ी छावनी | १५) |
| राघवदासजी नेपाली मनीरामजी की छावनी | २५) |
| रामकुमारदासजीअधिकारी | २५) |
| महन्थ रामचरणदासजी पंजाबी मठपुरी | १०) |
| ,, भगवानदास तुलसीबाड़ी | १५) |
| ,, रामनिरंजन दासजी तु० | १०) |
| ,, प्रह्लाददासजी | १०) |
| ,, रामप्रसाददासजी अमोली पुर कुटी | १५) |
| ,, रामदासजी डाड़िया | १५) |
| ,, हरिनारायणदासजी जानकी निवास | १५) |

१०) म० सियारघुवरदासजीछोटी कुटिया
१०) ,, तपस्वीजी की छावनी
१०) ,, शत्रुहनदासजी
१५) ,, रामशरणदासजी
१५) ,, रघुवरदासजी सीढ़ीपुर
१५) ,, रघुवरदासजी, राघवजी
११) रामसेवकदासजी चित्रकूटी गूदर
२५) महन्थ जानकीप्रसादजी मत्त गजेन्द्र
११) कन्हैयादासजी व्यास
१०) पुजारी जगदेवदासजी
१०) विंध्येश्वरीप्रसादजीकीमाता
११) महन्थ जनकदुलारीशरणजी बावनजी
२५) तरके महन्थ गोकुलदासजी बड़ी छावनी
१०) रामदासजी स्थान काठिया
१२) रामभवनशरणजी रामसखे
११) महन्थ रामटहलदासजी
१०) पं० मणीरामदासजी
१०) म० दामोदरदासजी रंगमहल
२५) महन्थ लक्ष्मणशरणजी जान की घाट,

—::*::—

महन्थ सियारामदासजी ५)
,, घनश्यामदासजी २)
,, रामचन्द्रदासजी रायगंज ४)
महाबीरदासजी १)
पुजारी रघुबीरदासजी पत्थर मन्दिर १)
म० हनुमानदासजी पत्थर मं० ५)
,, प्रेमदासजी अहिल्या घाट २)
जगन्नाथ प्रसादजी २)
पं० वैष्णवदासजी १)
म० देवादासजी खाकीअखाड़ा ४)
भद्देश्वर पंडा १)
म० रामप्रियादास लीला मं० १)
पं० रामदेवशरणजी १)
रामदासजीतपसी लक्ष्मणघाट२)
महन्त बलरामदासजी लक्ष्मण-घाट ५)
छविरामदासजी पुजारीलक्ष्मण घाट, १)
बलरामदासजी रामघाट २)
नारायणदासजी तपसी २)
जगन्नाथदासजीतुलसीबाड़ी १)
पं० सरयूशरण तुलसीबाड़ी २)
म० कौशल्यादासजी बु०खंडी ५)
जैरामदासजी बेतियामं० १)
म० नारायणदासजी तु० बाड़ी २)
रामकुमारदासजीछोटीकु० १)
म० रामशरणदासजीराघवकुञ्ज२)
दामोदरदासजी कटरा १)
मथुराप्रसाद मुन्शी १)

२) बैदेहीबल्लभशरणजी विभीषण कुण्ड
१) महन्त नारायणदासजी जगन्नाथ मन्दिर
२) रामलालदासजी
१) जयरामदासजी
५) पं० श्रीमाधोदासजी आनन्द भवन
५) परमहंस रामदासजी लालसाहब
२) गणेशदासजी
७) म० शत्रुहनशरणजी ऋणमो.
२) रामस्वरूपदासजी
४) म० गंगादासजी तुलसी बाड़ी
२) महन्त कामतादासजी सरयू मन्दिर
१) रामस्वरूपदासजी रायगंज
५) जगन्नाथदासजी हथुवा स्थान
२) जयरामदासजी फुलवरिया
१) रामसुन्दरदासजी
५) आकन वाले सीतारामदासजी
१) बुढ़िया माई
४) बाबू रघुनन्दनशरणजीअमांवा
५) महन्तरामचरणदासरामघाट
१) कृष्णदासजी
१) रामटहलदासजी गोबरी
५) अयोध्यादासजी बुटवल

पंडित भरतदासजी ५)
रामकिशोरदासजी १)
हनुमानदासजी वैद्य ५)
महन्तअवधशरणजी रामाबा ५)
पं० भगवत दासजी कौशल्या-भवन ५)
म० पुरुषोत्तम दासजी कोप-भवन १)
तुलसीदासजी १)
बृजविहारीदासजी १)
मलूकदासजी १)
कुञ्जविहारीदासजी १)
रामदेवशरणजी १)
रामदासजी १)
मिथिलाविहारी शरणजी २)
महन्थरामलखनशरणजीकिला५)
रामशरणदासजी २)
धर्म भगवान २)
रामपियारीशरण १)
म० राजकिशोरदासजी १)
म० रामजीवनदासजी २)
किशोरीशरणजी १)
बाबू कुन्दनलालजी २)
बाबू रामचन्द्रशर्मा २)
चन्द्रकलादेई २)
परमानन्दशरण जी २)
धनपतराय २)
रामविहारीशरणजी १)

१) बिमलाशरणजी
२) बाबू लवकुशशरणजी
१) सियावल्लभशरणजीसंतनिवास
१) सुदामादासजी संतनिवास
२) रघुनन्दनदासजी
१) रामदासजी
२) रामस्वरूपदासजी
१) केशोदासजी
४) म० जनकदुलारी शरणजी नवलकिशोर कुंज
१) रामचन्द्रप्रसादजी
१) पद्मदासजी
७) महन्थ कुंजविहारीशरणजी चारुशीला कुंज
२) वैष्णवदासजी
५) म० रघुवरशरणजी जालवन
२) बालकदासजीनृत्यराघवकुंज
५) म० जैरामदासजी
१) रामपदारथदासजी
५) म० रामदासजी स्थान वेदान्ती
१) रामदासजी नयाघाट
१) कमलाशरणजी अहिल्याघाट
२) संतशरणजी
१) वैष्णवदासजी स्वर्णखर कुंड
४) माई रामदुलारी टोडी मंदिर
५) लालमती बाई
५) जालवन माई
१) राजारामशरणजी

पं० म० श्रीमोहनदासजी गोपालपुर ५)
रामलखनदासजी २)
मुर्लीदासजी १)
म० रामदासजी रामधाम १)
द्वारिकादासजी २)
गिरवरदासजी २)
चारसंप्रदा ४)
वाजपेई रामसुधीरजी १)
म० कमलाशरणजी रायगंज ४)
रामस्वरूपदासदजीरायगंज १)
पं० रामजानकीशरणजी १)
गरीबदासजी १)
म० पं० सुदामादासजी २)
अयोध्यादासजी १)
रामानुजदास जी रा० गो० १)
पुजारी तुलसीदासजी रा. गो. २)
रामचरणदास जी १)
रणछोड़दासजी १)
प्रयागदासजी १)
भगवानदासजी १)
सियारघुवरशरणजी २)
जयरामदासजी १)
बलदेवदासजी १)
अनन्तदासजी १)
रामप्रकाशदासजी १)
रघुनन्दनदासजी २)
महन्थ हनुमानदासजी २)

१) सियारामदासजी सीढ़ीपुर
१) रामदासजी राघोजी का मंदिर
२) महन्त अयोध्यादासजी
१) रामअधीनदासजी रसिकनि.
५) महन्थ माधोदासजी छावनी रामकिंकर
१) रामनाथ ब्रह्मचारी रामघाट
२) महन्थ बलरामदासजी रावत
३) „ दयालदासजी खाकचौक
१) परमहंस बेनीमाधो
१) महन्थ रामकुमारदासजी रा. मसनेही
१) महन्थ दशरथीदासजी रामनिवास
१) महन्थ गोविन्ददासजी
१) जगन्नाथदासजी रामघाट
५) श्रीमौनीजी महाराज रामघाट
१) रामटहलदासजी नागा
मधुसूदनदासजी स्थान पं० भरतदास
१) जयरामदासजी पुजारी लख०
२) रामाज्ञादासजी छा० रामघाट
१) भगवतदासजी रामघाट
५) पलटूदासजी अखाड़ा
१) महन्थ रामरूपशरणजी
२) साकेत राजमहल
२) रामकुमारदासजी
५) दिनकरदासजी

दीनदयालशरणजी ५)
जयन्तीशरणजी ५)
महन्थ रामदासजी कटरा ७)
गंगादासजी १)
रामचरणदासजी महन्त बाघी-मंदिर ४)
रामरसालशरणजी १)
लक्ष्मणशरणजीबूढ़े कामदकुंज २)
मुसम्मात पंथपाकर २)
मु० नरपाली २)
राममनोहर शरणजी १)
अवधबिहारीशरणजी महन्थ ऋणमोचघाट १)
देवकी बाबू ऋणमोचन १)
सियारामशरणजी प्रेमी १)
गोपीदासजी १)
रामलालदासजी २
सरजूशरणजी २)
जानकीवल्लभदास जी २)
पुजारी नरहरीदासजी इवाक मन्दिर २)
महादेवप्रशाद लखनऊ २)
रामकिशोर वकील १)
सियावरदासजी १)
रामनारायणदासजी १)
रामध्यानदासजी १)
महन्थ हरीदासजी २)
रामेश्वरदासजी १)

१) बलरामदासजी मेहनावल
४) महन्थ रामनीरंगीदासजी
१) महन्थ सरजूदासजी तुलसी-बाड़ी
१) महन्थ अयोध्यादास रामाज्ञा-दासजी का स्थान
६) सियाशरणजी मधुकरराज
१) महन्थ रघुनाथदासजी बदनपुर
४) तपस्वी जयपुर वाले
२) अवधशरणजी श्रीजानकीघाट
१) सीतारामशरण जी
२) महन्थ सीतारामदासजी मंदिर दूबे का
१) सियारामदासजी नयाघाट
१) परमहंस रामसुन्दरदासजी
२) महन्थ धर्मदासजी बंकाघाट
१) रामचरणदासजी फतुहा
१) मदनमोहनदासजी वाकरगंज
महन्थ सीतारामदासजी नायक
४) मन्दिर
१) बासुदेवदासजी माधुरीकुञ्ज
१) सरजूदासजी कोठारी
५) प्रमोदवन बड़ी कुटिया महन्थ
१) गरीबदासजी
२) पं० रामकृष्णदासजी
१) देवकुमारदासजी
२) डिपटी द्वारिकाप्रसादजी
१) नरमदासजी

परमहंस शुकदेवदासजी ५)
नन्द रामदासजी १)
परमहंस रामदासजी गयावाले ७)
भगवतदासजी १)
नागा रामदासजी २)
म० लालदासजी नौगजी २)
धनुषधारीशरण गायनाचार्य ३)
मेवालाल दर्जी १)
बाबू जनकलीबिजय राघवकुञ्ज २)
हनुमानदास धर्मशाला २)
बलदेवनारायण वकील ३)
तुलसीदासजी १)
बासुदेवदासजी उर्मिलाशरणजी का चेला १)
रामआश्रयदास रामझरोखा १)
भरतदासजी छावनी तपसी १)
गंगादासजी १)
भगवानदासजी बृहस्पतिकुंड १)
मन्त्री रामयशजी १)
तपेश्वरदासजी महन्थ ५)

बृहस्पतिकुण्ड

महन्थ रामदासजी कमरिया ५)
रामेश्वरदासजी १)
महन्थ सरजूदासजी लवकुश २)
मन्दिर
सरयूदासजी नागा दिगम्बर ५)
महन्थ गंगादासजी ५)
हनुमानशरणजी कामदकुंज १)

५) अयोध्यादासजी फलहारी बामदेव

५) महन्त लक्ष्मणदासजी परसा

१) सीतारामदासजी संतनिवास

५) गजाधरदासजी पापरियामठ पुरी

४) परमहंस माधोदासजी मनी-पर्वत

१) बाबू जगतनारायणसिंह

१) महन्त रामसेवकदासजी

१) अनन्तदासजी

१) नरसिंहदासजी त्यागी

१) रामकिंकरशरणजी

१) मदनमोहनदासजी डाड़िया

३) महन्त रामस्वरूपदासजी लक्ष्मणघाट

२) ईश्वरदास जानकीकुञ्ज

१) रामखेलावनदासजी थपाथैली

५) सियारामदास चेला पंडितजी श्रीजानकीघाट

१) गणपतसिंह बिलारी

१) मदनमोहनदासजी

१) रामदासजी छावनी

१) नारायणदासजी रसौया छा०

५) वैष्णवदासजी गुजराती छा०

५) हरिहरदासजी परिक्रमा वाले

५) टीकमदासजी

१) भागीरथीलाल बिलारी

१) मनीराम फोनोग्राफर

बलदेवदासजी र० छा० १)

सारंगदासजी छावनी १)

पं० हरीदासजी १)

पंडिताइन सुभौली ५)

रामशरणदासजी १)

लक्ष्मीबाई ५)

रामदासजी ५)

रघुत्तमदासजी नयाघाट १)

रघुवरदासजी १)

हरिचरणदासजी बेतिया १)

पखाउजी मणीराम १)

रामअधारदासजी सखीजी का स्थान २)

रामशरणदासजी तुलसीबाड़ी १)

विमलाशरणजी तुलसीबाड़ी १)

भरतदासजी १)

महन्त नागेश्वरदासजी ३)

महन्त शत्रुहनदासजी २)

कोतवाल दासरथीदासजी १)

प्रेमी रामप्रियाशरणजी १)

पं० सियारामदासजी ३)

नारायणदासजी ५)

द्वारिकादासजी २)

वेदान्तीजी ३)

सीतारामदासजी १)

रामहरषदासजी १)

जगन्नाथदासजी १)

सुखरामदासजी १)

रघुनन्दनदासजी

२) नारायणदासजी
१) शिवरामदासजी
५) श्यामसुन्दरदासजी चेला ह-
रिनामदासजी
१) मधुसूदनदासजी मनीपर्वत
२) रामरजादासजी रामायणी
२) लालबिहारीदासजी
१) रामजसदासजी
१) भगवानदासजी
१) रामलोकनदासजी
१) रामेश्वरदासजी
५) महन्त सीतारामदासजी ख-
जुहाकुण्ड
१) दुखहरनदासजी
१) बलभद्रसिंहजी अमावांकोठी
२) पट्टा वाले हरीदासजी
५) महन्त रामप्रियादासजी महा
निर्वानी
१) पंजाबी मौनी जगदीश बाबू
१) महाबीरदासजी
२) रामलखनदासजी
१) गंगादासजी
५) परमहंस माखनदासजी व-
सिष्ठकुण्ड
५) महन्थ फकीरेरामजी
२) रामशिंगारशरणजी जानकी०
१) सीतारामशरणजी
४) हनुमानशरणजी छत्रपुर

रामकिशोर विद्यार्थी १)
सीतारामशरणजी २)
महन्थ बालमुकुन्ददासजी २)
नयाघाट
लक्ष्मणदासजी १)
रामबिहारीशरण शुक्ल नया० २)
म० सरजूदासजीवसिष्ठभवन ५)
म० सुग्रीवदासजी कपुरिया ५)
छंगा भगत १)
जानकीदासजी नागा १)
बाबू कालीप्रसादजी २)
पुजारी महाबीरदासजी २)
रुधौली मन्दिर
परमहंस पर्वताधीश सिया- १)
रामशरणजी
हनुमानदासजी १)
महन्थ रामरतनदासजी चि- ५)
रक्त स्थान
कोतवाल बद्रीदासजी १)
रामखेलावनदासजी १)
पं० रामदासजी खाकीअखाड़ा १)
राघोदासजी छावनी १)
शत्रुहनशरणजी छावनी ८)
गजानन बाबा छावनी ५)
रामसुन्दरदासजी रामायणी २)
पं० मथुरादासजी छावनी १)
रामजीवनदासजी पुजारी छा० २)
भीषमदासजी बाबा छावनी २)

२) रामकृष्णदासजीउत्सवी छा०
२) सीतारामदासजीरामधुनिवाले
१) बलरामदासजी छावनी
१) रामविहारीदासजी छावनी
१) पुजारी अवधकिशोरदासजी
१) कमलेश्वरदासजी कोतवाल छावनी
१) सीतारामदासजी तपस्वीछा०
१) राममनोहरदासजी रसोंया छावनी
१) रामस्वरूपदासजी छावनी

बालमुकुन्ददासजी २)
बलदेवदासजी नरसिंह २)
रामरतनदासजी रसोइया १)
रामअधीनदासजी १)
रामकुमारदासजीगोपालपुर १)
बालगोविन्ददासजीथिलहिया १)
रामटहलदासजी १)
मंगलदासजी २)
पाटनदीन मिस्त्री २)
रामानुजपरांकुशदासजी १)

રામરીતિર્મહાતેજા: પરબ્રહ્મ સનાતન: |
જયતા જગ નવી નાથો વેદવેદ્યો મહામતિ: ||
Ankur Nagpal



# अकरादिक्रमेण सूत्राणां सूची ।

## – आ –

**इति सूत्रसूची समाप्ता ।**

સમરીતિર્મહાતેજાઃ પરબ્રહ્મ સનાતનઃ।
જયતાડ્જાનકી નાથો વેદવેદ્યો મહામતિઃ॥
Ankur Nagar

